वर्षः षोडशः

अंकः प्रथमः

स्वीकृतम्—शिक्षा निदेशालयेन दिल्ली प्रशासनस्य शिक्षालयानां पुस्तकालयानां च कृते
द्वारा पत्र सं. 5/1/84 पा० पु० 2581-3881—दिनांक 4.8.84

"भूयादयं नवो वर्षः सर्वेषां सुखशान्तिकृत्" (प्र० सम्पादकः)

## विषय-क्रमः



शाकाब्द 1913
वैक्रमाब्द 2048 माघ मासस्य
सन् 1993 जनवरी मासस्य

प्रधान-सम्पादकः
"प्रभाकर" रामरत्न शास्त्री
साहित्याचार्य, एम. ए.
1418, बाजार गुलियान, दिल्ली-110006
दूरभाष : 3264886

आजीवन—शुल्कम् 251) रूप्यकाणि

वार्षिकं शुल्कम् 30) रूप्यकाणि

## सम्पादकीयम् :— —रामरत्न शास्त्री

१—नववर्षारम्भः—

ज्ञानाधिदैवतस्य परमेश्वरस्य कृपया, गुरुणां पितृणां च शुभाशीर्वादेन, सहयोगिनां परिश्रमेण संस्कृतज्ञानां च सहयोगेन "संस्कृतामृतम्" अनेन अङ्केन स्वायुषः "षोडशं" वर्षम् अधिरोहति।

उत्तरोत्तरं आभ्यन्तरं वाह्यं च समुत्कर्षम् अधिगच्छत् एतत् "संस्कृतामृतम्" नियत कालिकत्वेन प्रतिमासं समौहावतां हस्तार्पितं स्यात् इति प्रयासः अस्माभिः सदा अकारि करिष्यते च।

आशास्महे यत् आगामिनि अपि काले वयम् अस्मिन् सारस्वत यज्ञ पारायणे अविरतं स्वकीय लेखकानां पाठकानां च सहयोगं लप्स्यामहे। अपेक्षामहे च यत् काले काले संस्कृत विद्वांसः संस्कृतामृतोपादेयता-समुत्कर्ष-निर्देशकान् प्रस्तावान् परामर्शान् च संप्रेष्य अस्मद् हितं संस्कृत सेवां च करिष्यन्ति।

ईसवीय नव वर्ष—(१९९३) उपलक्ष्ये वयं हृदयेन समेषां तत्र भवतां भवतां मंगलम् कामयामहे।

प्रार्थयामः च अप्रेषित शुल्कान् संस्कृतामृतस्य ग्राहक वान्धवान् यत् ते १९९३ वर्षस्य कृते त्रिंशत् रूप्यकाणि (३०·०० रु०) शुल्कत्वेन यथाशीघ्रं प्रेषयन्तु ग्राहक संख्या वर्धने च सहायकाः भवन्तु।

कस्याः अपि "संस्कृत पत्रिकायाः" सञ्चालनं प्रकाशनं च कियद् दुष्करम् इति सर्वविदितम्। सत्यपि बाधा बाहुल्ये यत् किमपि (पवित्रम्) लक्ष्यम् उद्दिश्य वयं संस्कृतामृतस्य निर्बाधं प्रकाशनाय प्रतिबद्धाः स्मः। अस्य साफल्यं सार्थकत्वं च पाठकाधीनमेव।

संस्कृतज्ञाः पाठका एव संस्कृतपत्राणामाश्रयभूता इत्यस्माकं मतम् अतः प्रार्थयन्ते प्राचार्याः विद्यालयानां महाविद्यालयानां च तत्तत् सम्बद्धाः संस्कृताध्यापकाः प्राध्यापकाः च तथा च अधिकारिणः वाचनालयानां पुस्तकालयनां वा "संस्कृतामृतम् इदमभिस्वीकर्तुम्-स्वीकर्तुं चास्य ग्राहकताम्। इत्थमेव सहयोगेन प्रोत्साहनेन च विज्ञाः संस्कृतज्ञाः अस्मान् अनुगृहीष्यन्ति इति आशया वयं नूतनेऽस्मिन् वर्षे प्रविशामः। पुनरपि कामयामहे च प्रभुकृपया सर्वेषाम् अपि बन्धूनां जीवनं समृद्धं सार्थकं सफलं च स्यात् इति॥

## नवाब्दाभिनन्दनम्

१—ईशवीये नवे वर्षे त्रिनवति तमे मते।
"पुण्ये जनवरीमासे" पवित्रे प्रथमे दिने॥
सर्वमित्रगणानां वै प्रजानां चापि स्वस्तये।
वर्धापनानि भूयांसि प्रस्तूयन्ते सुधेन्दुना॥

२—पन्थानो भरतावनौ निवसतां धर्मप्रधाना ध्रुवं,
ह्याचार्या निजधर्मकर्म-निरता विद्यासु पारंगताः।
शिष्याः स्युर्गुरु-शास्त्रशासनपराः
न्यायप्रदा मन्त्रिणो,
निष्पक्षास्तु भवन्तु राजपुरुषाः
स्वस्थाः सखायोऽपि नः॥

विद्वदनुग्रहाकांक्षी—
(डा० अमियचन्द्र शास्त्री)
निवास—मणिकुटीरम् बाईपास, कोसीकलां (मथुरा)

'(३) 'वर्षे नूत्ने सकल सुखदं
'श्रेयसे चास्तु सर्वम्"
(उमारमण झा)

(४) जनास्तु सर्वे हि सुखेनयुक्ताः
भवन्तु नित्यं हि च दुःख-मुक्ताः
(आशुतोष मिश्र—सीतामढ़ी)

# पदं पुरः प्रवर्धताम्

ओमप्रकाश ठाकुरः
डी-७५७ सरस्वती विहार, दिल्ली-३४

स्वदेशमानरक्षणं पदं पुरः प्रवर्धताम् ।

१

भारतं मम प्रियं क्षितेर्विभूषणं परं
परम्पराभिरक्षणे रतं श्रियो निकेतनं
दुराशयश्च यो जनोऽस्य मानभङ्गमीहते
तद्विभञ्जने तृणं तृणं प्रभञ्जनायताम् ।

२

अभिलषामि वैरिणां निरोद्धुमग्रग पदं
आततायिनामथो निहन्तुमुद्धतं मदं
गिरीन् निरीक्ष्य सम्मुखे मनो न मे प्रकम्पताम्
राष्ट्ररक्षणे हि जीवनं प्रयातु धन्यताम् ।

३

न हीदृशंतमः क्वचिन्न नाशितं हि यन्मया
न कण्टकंतथाविधं समुद्धृतं न यन्मया
वने वने विगाहनं नगे नगे ममाटनं
जयं श्रियं ददातु देशगौरवाय कल्पताम् ।

४

यत्र भात्यनेकवर्णपुष्पवल्लरीच यः
सौरभं मनोहरं प्रसारयन् समन्ततः
वाटिका विभूषिता मदीयदेशजा सदा
विकासिता सुवासिता सतां मुदे प्रजायताम् ।

५

वैभवैर्विमण्डिता सुशस्यश्यामला सदा
धीरवेषधारिणी च वैदुषीविभास्वरा
कलाकलापराजिता सुनीतिगन्धवासिता
भारती वसुन्धरा नवाऽऽभया विराजताम् ।

गीतिका

# प्राणिरक्षा मम व्रतम्

—डॉ० कैलाशनाथ द्विवेदी
प्राचार्यः, म० प्र० महाविद्यालयः कोच (जालौन)

दक्षकन्याऽहं सुदक्षा प्राणिरक्षा मम व्रतम् !
पुत्रका इव प्रकृतिप्राङ्गणपोषिता मन्दारवृक्षाः,
लालिताः दुर्ललितजीवास्तेषां मयैव कृताऽत्र रक्षा !
नैव हिंसा कस्यचित् भयनाशनेऽपि सदैव दक्षा,
प्राणिनां परिपालनं भरणञ्च दिव्यं मम व्रतम् ।
दक्षकन्याऽहं······(१)

शिशूनां स्नेहेन क्रोडे लालनं परिपालनम्,
वात्सल्यभावं वर्धितं सम्पोषणं सञ्चालनम् !
विविधक्रीडासुखरताऽहं साधनातरुदोलनम्,
आदित्यमाताऽहमखण्डं ज्योतिरेव मया धृतम् ।
दक्षकन्याऽहं······(२)

संरक्षिता सा कण्वकन्या पतिवियुक्ता दीनहीना,
सर्वंदमनः पुत्रकः पुष्टो मया साहममलीना !
दुष्यन्तदृष्ट्यामागता स्वाशामयी सृष्टिर्नवीना,
आशाप्रदाऽहं सर्वदा स्वाशयैव जगद्भृतम् !
दक्षकन्याऽहं······(३)

प्रजापतिकश्यपव्रते सेवारता संयोगिनीव,
मारीचमहिमविवर्धनेऽहं तत्परा तद्योगिनीव !
आदित्यतेजो धारयित्वा फलवती मृदुमेदिनीव,
अन्धकारविनाशने विश्वे मया तेजः कृतम् !
दक्षकन्याऽहं······(४)

आत्मज्ञानं लोकमानं सुगतिपूर्णं जीवनम्,
जीवने दृढकर्मनिष्ठा निष्कामकर्मणि जीवनम् !
कामनाफलवर्जितमिव क्लेशहीनं जीवनम्,
ब्रह्माण्डभाण्डं रसमयं स्वकर्मणैव मयाभृतम् !
दक्षकन्याऽहं······(५)

त्यागपूर्णजीवने मम विद्यते न हि योगबाधा,
आसक्तितृष्णामोहमायाः सर्वथा दूरे सबाधाः,
भव्यभावैर्गतिमयी मम साधनासरिता ह्यगाधा,
साधनाभिः श्रीमये विश्वेऽप्यैश्वर्यं हृतम् !
दक्षकन्याऽहं सुदक्षा प्राणिरक्षा मम व्रतम् !! (६)

# प्राचीनार्वाचीन-गणराज्ययोस्तुलनात्मकं समीक्षणम्

—डा० रामेश्वरी रासेश्वरी

प्राचीनधर्मशास्त्रे राजधर्मस्य व्यवहारः राजनीतावबलोक्यते । आपस्तम्बधर्मसूत्रे राजधर्मविषयकमितिवृत्तमुपलभ्यते ।

सर्वा विद्या राजधर्मेषु युक्ताः
सर्वे लोकाः राजधर्मे प्रविष्टाः ।
सर्वे धर्मा राजधर्मप्रधानाः

इति (महा० भा० ६२।२५, २६, २६) व्यासवचनेषु राजधर्मस्य बृहद्विवेचनं वर्तते ।

'सर्वस्य जीवलोकस्य राजधर्मः परायणमिति वचसा लोककल्याणाय धर्मप्रधानः राजधर्म आवश्यक इति महाभारते स्पष्टीकृतम् । तत्रैव सर्वेषु धर्मेषु राजधर्मः सारतत्त्वेनाङ्गीकृतो वर्तते । व्यासो बृहस्पतिः, भारद्वाजः, गौरशिराः, काव्यः, महेन्द्रः, मनुः, प्राचेतसः, विशालाक्षश्चेत्यादिभिः 'राज्ञः धर्मः' (राजधर्मः) संकेतितः । आपस्तम्बसूत्रे (२।५।१०।१३।१६) वशिष्ठविष्णुस्मृत्योः । (वशि० १६।१-२ विष्णु० ३।२-३) नारदप्रकीर्णके (५-७ एवं ३३-३४), महाभारते (शान्ति० ७७।३३ एवं ५७।१५), मत्स्यपुराणे (२१५।६३), मार्कण्डेयपुराणे (२।२८ एवं २८।३६), गौतमे (१०।७-८), 'राज्ञः प्रभूततमोद्देश्यः'राजधर्मः' इति व्यवहारः दृश्यते । अत्रान्तरे आचार-व्यवहार-प्रायश्चित्तादीनामपि नियतनियमसंयमाः प्रकटीकृता ।

युगप्रवर्तको राजा धर्माधर्मप्रशिक्षणात् ।
युगानां न प्रजानां न दोषः किन्तु नृपस्य तु ॥

इति श्लोकेन (शु० नी० ३।१।६०) शुक्राचार्यः "राजैव स्वर्णयुगप्रवर्तकः ।" तेनैव राज्ये विपद्, संग्रामः, अशान्तिश्चोत्पाद्यते । राजा आचारादेव लोकं रक्षति । लोकैरेव राज्यं वर्धते । अत एवात्र धर्मशास्त्रे धर्मेणैव राजधर्मस्य योगक्षेम इति ब्रुवाणः ब्रह्मा महेश्वरः,स्कन्दः,इन्द्रः, प्राचेतसमनुः,बृहस्पतिः, शुक्रः, भारद्वाजः, व्यासः राजधर्मस्य व्याख्यानं कृतवन्तः । धर्मसम्मतत्वादत्र विषये सर्वैराचार्यैः राजधर्मस्य महत्त्वमङ्गीकृतम् ।

'मात्स्यन्यायाभिभूताः प्रजाः मनुं वैवस्वतं राजानं चक्रिरे' (कौ० १।१३) इति कौटिल्येन राज्योत्पत्तिसिद्धान्तेऽभिहितम् । कारणमिदमत्र वर्तते । मत्स्या इव जनाः परस्परं दुर्बलान् नित्यं भक्षयन्ति(वाल्मी० रामा० अयो० ६७।३१) राजधर्मसम्बन्धिनो विवेचनं संस्कृतसाहित्ये प्रभूततरं वर्तते । को नाम राजधर्मः 'राज्ञः धर्मः राजधर्म' इति । राज्ञः भावः राज्यम्, तदेव धर्म इत्यपि तत्परिभाषा स्फुटी भवति ।

प्राचीनार्वाचीनराजनीतौ गणराज्यस्यापि विवरणमुपलभ्यते । किन्नाम गणराज्यम् ।

राज्ञः भावः राज्यम् । गणस्य राज्यं गणराज्यम् । गणशब्दार्थस्तु समूहार्थवाचकः । वैयाकरणाः गणपाठे गणपठितानां शब्दानामन्वाख्यानमेकत्रीकरणार्थं कुर्वन्ति । धातुगणपाठे धातूनां गणनम् । एवञ्चात्र तद्गणानां गणना क्रियते । अत्र गणस्यार्थस्तु जनवाचकः ।

जनपदेनाधुनिकाः जनतामङ्गी कुर्वन्ति । पाणिनिना संघस्वार्थः गणेति निर्दिष्टः (अष्टाध्यायी ३।३।८६) पतञ्जलिः महाभाष्ये संघशब्दः समूहः समानार्थकः इति कथितवान् । प्राचीनकाले मध्यकाले च शासनव्यवस्था परम्परागतैकराजात्मिका आसीत् । आपत्कालं विहाय सर्वदा ज्येष्ठपुत्र एव राज्यस्य उत्तराधिकारी भवति ।

गणराज्यस्य स्थापना बुद्धसमये तदन्तर्वर्तिके द्वित्रिवर्षोत्तरे वा समये भारते अल्पजनाधिपत्यशासनं गणतन्त्रम् आसीत् । महाभारते (शान्ति० १०७) शान्तिपर्वणि गणराज्यविषये बहूक्तम् । तद् यदा-गणानां नाशः आन्तरिक कलहेन भवति । यत्र बहवः शासकाः भवन्ति, तत्र नीतिरहस्यज्ञाने अधि-

कृताः न भवन्ति। अतः गणस्य रक्षार्थं नियतानामधिकारिणां समावेशो भवेत्। यदि गणेषु विभिन्नकुलोत्पन्नानां जनानां मध्ये कलहो भवति, तदा तत्परिहारः दुर्गमः। तत्रैव गणान्तर्गतस्य कलहस्य परिहारो भवति। आन्तरिककलहाः बाह्योत्पन्नेष्वपि दुरासदाः भवन्ति। तेभ्यः बाह्यकलहोऽपि न वारणीयो इत्यादि।

गणस्य सदस्याः जन्मना कुलपरम्परायां वा साम्यमुपजपन्ति। तेषु शौर्यं मेधा, शरीरं ऐश्वर्यञ्च सम्पन्नाः भवन्तु। आन्तरिककलहोत्पादनेनोत्कोचप्रदानेन वा शत्रवः गणभेदं कुर्वन्ति। अतः गणस्य दृढीभावः एकात्मकत्वेनैव भवति। गणराज्यस्य विषये महाभारते शासनविषयः तद्गेतवश्चेत्थं प्रतिपादिताः।

१—भेदो गोपनीयो नहि भवत्येव।

२—यत्र ईर्ष्यया लोभेन वा व्यभिचारो वर्द्धते, तत्रेतिनाशोऽप्यवश्यम्भवति। महाभारते शान्तिपर्वणि वृष्णिसंघस्य दृष्टान्तोऽवलोक्यते।

तत्रत्य वृष्णिसंघस्य अध्यक्षः श्रीकृष्णः। महाभारते संघस्य नेता चतुर्भिः गुणैरुपशोभते—दूरदर्शनेन, सहिष्णुतया, आत्मनिग्रहेण, आर्जववृत्तित्यागेन वा।

अष्टाध्याय्यां पाणिनिः संघद्वयस्य संकेतं करोति। तत्रादौ आयुधजीविनः तदितरे वा। आयुधजीविनस्तु आयुधधारिणः युद्धं च कुर्वन्ति। समये-समये च राजसेनायां नियुक्ताः भवन्ति। अन्ये च तदितरे, येऽन्येषु कर्मसु नियुक्ताः। वाह्लीकदेशीयसंघेषु ब्राह्मणाः क्षत्रियास्तथान्ये जनाः भवन्ति। (अष्टा० ५।३।११५-११७)।

वार्तिककारेण कात्यायनेनाभिहितमत्रसंघः एकराजात्मकत्वमित्यत्र भेदो वर्तते। कौटिल्यार्थशास्त्रे 'द्वैपायनेन युद्धमानः वृष्णिसंघः विननाश' इति प्रमाणमुपलभ्यते। कौटिल्यः संघविषयकमितिवृत्तम् एकादशाधिकारेण सविस्तरं वर्णयति। तत्रैव (कौटि० ११।१७) राज्यशासनम् कुलीनः प्रचालयति। यतो हि कुलसंघदुर्जेयो भवति। संघसम्मेलनं सैन्यसम्मेलनेन श्रेयो भवति। कम्बोजेषु आराष्ट्रे क्षत्रियाणां चान्येषां श्रेणयः 'वार्ताशास्त्रोपजीविन्य' आसन्। संघेऽस्मिन् कृषकाः, व्यापारिणः, युद्धकर्तारः भवन्ति। तदपरे 'राजशब्दोपजीवी' लिच्छविः, वृजिकः, मल्लकः, मुद्रकः, कुकुरः, कुरुः, पाञ्चालः। वार्ताशास्त्रोपजीविनः कृषकाः। ते च कृषका आपात्समये राष्ट्ररक्षार्थं युद्धार्थं सदैवोद्यताः अभवन्। कलहं विना कपटाचरणेन राजा विग्रहमुपस्थापयति। इति कौटिल्येन प्रोक्तम्। राजैव संघमुख्येषु सदस्येषु विग्रहं सम्पादयन्ति। ५००-६०० ईशोत्तरवर्षात् गणराज्यनां ह्रासो जातः। ततश्च गणराज्यानि विनष्टानि। एतत् सम्बन्धे बौद्धग्रन्थेषु, यूनानीकथानकेषु, मुद्रासु, शिलालेखेषु चोपलभ्यते प्रचुरम् इतिवृत्तम्।

१५० ईशवीये जूनागढस्थाभिलेखे रुद्रदामा सगर्वम् उद्घोषयति—'मयैव यौधेयाः परास्ताः' चतुर्थशताब्द्युत्तरे समुद्रगुप्तोऽपि यौधेयान् मालवात् आर्जुनान् पराजितवान्। यौधेयगणा महाराजानां सेनापतिनेतृपदे नियुक्ताः इति प्रमाणं गुप्तकालीनप्राप्ताभिलेखेन दृढो भवति (सं० ५८, पृ० २५१) बृहत्संहितायां यौधेयआर्जुनयोः विषये संकेतितम्। (बृ० सं० ४।२५।५।४०।६७, ७५।१४।२५, २८, १६, २१, १७, १९) यूनानीलेखकैः क्षुद्रक-मालव-शिवि अम्बोष्ठानामुल्लेखो विहितः। तानि तात्कालिकगणराज्यानि आसन्। बौद्धग्रन्थेषु एकादशगणराज्यानामुल्लेखो वर्तते। तेषां राजधानी अपि निर्दिष्टा। यथा-शाक्यः, मल्लः, विदेहः, लिच्छिविः। तेषां गणराज्यानां क्रमशः कपिलवस्तु, कुशीनगरम्। मिथिला, वैशाली चेति राजधान्य आसन् (हिन्दूपाटिली भाग १, अध्याय ८, पृ० सं० ६३-६८) राइसडेविस् लेखकः स्वीये ग्रन्थे "बुद्धिस्ट आफ इण्डिया" इत्यस्मिनभिहितं करोति—'शाक्यानां शासनविधिः न्यायविधिकर्मणि कपिलवस्तुनि संथा-

गारे सम्पद्यते। तत्रायं विधिः प्रमुखो विनियोजयति। सः सभायामध्यक्षपदेन कार्यं सम्पादयति, राज्यं करोति तस्योपाधिः राजा इति तत्रैव एकदा गौतमबुद्धोऽपि राजाऽभिलाषेण गतः भद्दियं राजानं चकार तत्स्थले एव तत्पितुः शुद्धोधनः राजेति पदं समलञ्चकार।

डा० जायसवालमहोदयेन सिद्धान्ततः गौतमबुद्धः गणराज्यानाम् शासनविधिः बौद्धसंघव्यवस्थयैव गृहीत इति भ्रामकं प्रतीयते। डा० डी० आर० भण्डारकोऽपि तदाधारे निर्मूल एव। कारणमत्र एतावता कथने किमपि प्रमाणं नोपलभ्यते। बुद्धः अजातशत्रुं कथयति यावत्काले वज्जिवर्गः सप्तोपायानां पालनं करिष्यन्तीति। तेषां नाराः नावश्यम्भवीति कथनाधारे बौद्धसंघानां नियमपद्धिः वज्जिसंघीयनियमाधारे वर्तते सापि निराधारा ज्ञायते। ते च सप्तोपायाः महापरिनिव्वाणसुत्तस्य १ अध्याये-

१—समये-समये जनाह्वानं सभाकरणञ्च।

२—चिन्तैक्यैव निर्णयः कार्यकारित्वे च नयः।

३—अपूर्वप्रतिष्ठितविषयेषु नियमानुकरणम् तत्समाप्तिः कार्यशीलत्वं च।

४—गुरुजनानां सत्कारः तेषु भक्तिः समादरश्च।

५—बलात् स्वकुलोत्पन्नानां स्त्रीणां शीलभंगः अपहरणञ्च।

६—वज्जिजनानां तीर्थस्थानरक्षणं अर्जनपूजनम् च।

७—तत्र स्थलेषु रक्षा संरक्षणं चिन्तनम्।

प्राचीनकाले गणराज्यसम्बन्धिनः कतिपया महत्त्वपूर्णविषयः नोपलभ्यन्ते। यथा के मताधिकारिण;, राज्यसभायाः सदस्यता केनांगीकर्तुं शक्यते। मतदानं कथं भवति। सदस्यता कियदवधेः स्यात्। सभायाः शक्तयः कार्यविधयश्च के इत्येषां विवेचनं नोपलभ्यते (हिन्दूपोलिटिकल थिअरी पृ० २५८)।

राइसडेविसः जातकाधारेण वैसालीनगरे ७७०७ राजानः अभवन् इति कथयति (बुद्धिष्ट आफ पृ० ४१)। फास्बाल इत्यनेनाभिहितमत्र वैशालीनगरे गणराज्ञां स्नानार्थं कुलानुरूपमेकं सरोवरमासीत् (भट्टसालजातकजिल्द ४, पृ० १४८) पद्यवस्तुप्रमाणेन लिच्छिविवंशे चतुरशीतिसहस्रेभ्यः द्विगुणिताः प्रमुखाः राजानः आसन्। राजशब्दोपजीविनः गणाः इति धर्मशास्त्रेष्वर्थशास्त्रेष्वपि गणराज्यस्योल्लेखः वर्तते। डा० भण्डारकृत सम आस्येक्टस आव एश्येंट हिन्दूपालिसी-ग्रन्थे गणराज्यस्य संक्षिप्तमितिवृत्तमुपलभ्यते।

पौरजानपदविभाजनं वैदिककालादारभ्य बौद्धगुप्तकालं यावत् विरासे समायातः। डा० जायसवालेनात्र बहूक्तम्। शुक्राचार्यः (१।२६२-३११), मनुः (१।३६६), गौतमः (१।१६-२५), याज्ञवल्क्यः (१।६) इत्याद्याचार्यैः एवंविधस्थलेषु सुस्पष्टमभिहितं गणराज्यप्रसंगे द्वैराज्यं वैराज्यम् इत्युभयथा भेदो विहितः। परम्परागतोपपन्नेषु गणराज्यस्याद्यापि प्रभुत्वं दरीदृश्यते। यथा—नैपालराज्यम् सिक्किमराज्यम् इत्यादि।

(संस्कृत प्रचारकात् साभारम्)

---

## विशेष सूचना

अनिच्छन्तोऽपि वयं सूचयितुं विवशाः स्मः यत् चतुर्मुखी महार्घतावशात् कर्गलादि मुद्रण सामग्रीणाँ मुद्रणालयस्य च व्ययाधिक्यस्य कारणात् "संस्कृतामृतस्य" वार्षिकशुल्कत्वेन जनवरी १९९३ तः त्रिंशत्-रूप्यकाणि (रु० ३०-००) निर्धारितानि सन्ति।

आशास्महे संस्कृतानुरागिणः अस्मत् पाठकाः पूर्ववत् सहयोगं करिष्यन्ति। प्रेरयिष्यन्ति च अधिकाधिकं स्व परिचितान् संस्कृतामृतस्य ग्राहकत्वाय। येन "संस्कृतामृतम्" चिरायुष्कं संभवेत्॥

—सम्पादकमण्डलम्

---

# 'नवमः सर्गः'

## दशमेश चरितम्

—श्रीधर बलूणी शास्त्री भजनपुरा, दिल्ली-५३

गौरवं भजति मानवो मुदा,
कीर्तयन् गुणगणान् हरेः सदा ।
सोऽप्यकाल पुरुषो नरं तृणं,
वात्यया नयति निश्चितं स्थलम् ।।१।।

पार्वता गुरुविरोधिनो नृपाः
राज्यकार्यनिरतं मुहुज्जमम् ।
तोषयन्ति विविधैरसायनै-
रात्मराज्यपरिरक्षणोत्सुकाः ।।२।।

वत्सरेषु शरदेषु षट्सु सः,
शास्त्रकाव्यरचनारतो गुरुः ।
आदिग्रन्थवचनान्यशोधयन्,
तां शतद्रु सरितांन्यसेवत ।।३।।

सोऽत्ररामचरितं तु संस्कृतात्,
पाठनाय जनभाषयाऽलिखत् ।
शिक्षणाय सकलान् जनान् तदा,
शिष्यवर्गमपि दीक्षितं दधौ ।।४।।

प्रार्थयत् स तदा बुधान् द्विजान्,
पाठयन्तु सुरभारतीं जनान् ।
ते वदन्ति ननु वैदिको द्विजः,
संस्कृतं पठति, संगतं न ते ।।५।।

तान् विहस्य गुरुणा च भाषितं,
संस्कृत भवतु सर्वभाषणम् ।
तादृशश्चसमयः समागतः,
भाषतां जनगणश्च संस्कृतम् ।।६।।

पञ्चशिष्यनिबहं गुरुस्तदा,
शिष्यपन्थहितचिन्तने पुनः ।
प्रेषयत्तु नगरं बनारसं,
संस्कृत सुरगिरां पठन्तु ते ।।७।।

ज्ञानकीर्तिकरमार्ग चिन्तने,
ते गता पठनपाठने तदा ।
काव्यशास्त्रनिगमागमादिषु,
ख्यातिमत्र विपुला भजन्ति वा ।। ।।

ब्रह्मकर्मविषयेषुशाश्वतं,
जीवजन्ममरणादिहेतुषु ।
शैवशाक्तजिनबुद्धवैष्णवे,
नश्वरं विभवितां श्रुता मता ।।९।।

प्राप्य तत्र नगराद् बनारसात्,
संस्कृते निपुणतां निवेद्य च ।
शास्त्रयुद्धमृगयां विहा यते,
निर्मलं पथम मथाऽभजन् ।।१०।।

ब्रह्मवाक्यपथमेव संश्रितान्,
तान्विलोक्य गुरुणाविचिन्तितम् ।
शास्त्ररक्षणपरः प्रकृष्टकृत्,
सिक्खसंगतकृते विशेषतः ।।११।।

पूर्ण रक्षणविधिः कथं भवेत्,
संगतः प्रवलतां भवेत् पुनः ।
शस्त्रसैनिक हयादि संग्रहं,
सर्वतो दिशि करोति निर्भयः ।।१२।।

सो निमन्त्र्य बहु दक्षिणो द्विजान्,
तेषु प्राप्य नियमपरायणम् ।
तान् प्रपच्छ यजनं महत्तमं,
येन पन्थगुरुता भवेद् भुवि ।।१३।।

याजका द्विजगणा गुरुं तदा,
सूचयन्ति विजयस्य साधनम् ।
सिद्धया भवति दुर्गया जय,
स्तादृशं च यजनं विधीयताम् ।।१४।।

तान् गुरुर्वदति याजकोत्तमं,
तं नयतु यजने प्रकर्षकम् ।
नैष्टिकं श्रुति धुरन्धरं प्रभुं,
यः समर्थं इति वो मताऽधुना ।।१५।।

विप्रवृन्दमतिरेव तादृशी,
स्तौति नामगणना यदाभवत् ।
राजकोऽस्ति नगरे बनारसे,
केशवोऽत्र यजनं विधास्यति ॥१६॥
सा गता श्रुतिपरम्परा ततः,
केशवं प्रति बनारसं तदा ।
न्यास मन्त्र विधियोग पण्डितः,
सो जगाम गुरुयज्ञ मण्डपे ॥१७॥
केशवो द्विजवृतः शिवार्चने,
मन्त्र पाठ सहितो हविं तदा ।
सो जुहोत्यविरतं हुताशनं,
याजन नवममासतां गतः ॥१८॥
सोद्‌गता भगवती तथापि सा,
संगतो वहति धैर्य विप्लवम् ॥
श्रीगुरुस्तु हृदये विचारयन्,
तैजसं ज्वलतु मेऽत्र संगते ॥१९॥
यज्ञपूर्ति मनसा ततो धृतां,
तां समस्तहवनीयसम्पदाम् ।
कुण्डमध्यदहने क्षिपत्यसौ,
दीप्ततीक्ष्णकरवालमाक्षन् ॥२०॥
तां प्रदर्श्य वदति स संगतं,
सा शिवा प्रकटितेयमीदृशी ।
या विधास्यति वधं तु दुष्कृतां,
सो बली भवति योऽसिधारकः ॥२१॥
न्यस्तजानुरथवीरमुद्रया,
स प्रसारितभुजे दधदसिम् ।
उच्चरन् स्तुतिमतीव निर्भया,
शोभते विनतशीर्षको मुदा ॥२२॥
खड्गदेव ! मधुकैटभान्तिद,
चन्द्रहास ! महिषासुरान्तक ।
चण्डमुण्डवधकृन्निशुंभहन्,
हे कृपाण तव स्वागतं प्रभो ॥२३॥

चक्रनन्दकगदाम्बुजाकरः,
श्रीपतिस्त्वमसि देवकी सुतः ।
शूलचापशरनागभूषितः,
शङ्करो भवसि नीललोहितः ॥२४॥
भैरवो भवसि शूलप्रासकः,
पाशरूपमपि वारुणं तव ।
दग्धुमर्हसि जगद्धनञ्जयः,
त्वद्बलेन मरुतां नभोगतिः ॥२५॥
राघवो जयति रावणं त्वया,
माधवो हरति कंसभीतिकाम् ।
पाण्डवः कुरुबलं निहन्ति तं,
ताण्डवैः रिपुबलं पलायते ॥२६॥
क्षत्रिया विजयिनो रणाङ्गणे,
शौर्यवीर्यबल योग शोभिनः ।
भूतले सततशस्त्ररक्षिते,
शास्त्रशिल्प पठनं प्रवर्तते ॥२७॥
चण्डिका हरिहरौ त्वमेव स,
भैरवो वरुणवह्निमारुताः ।
सर्वशक्तिमयखड्गदेवते,
त्वं प्रसीद दुरितोपशान्तये ॥२८॥
शान्तिकान्ति सुखज्ञानवैभवं,
धर्म कर्म धनधान्य संचयम् ।
सर्वमेव तव वीर्य रक्षितं,
जीवमात्रसदयः प्रसीदताम् ॥२९॥
त्वां श्रयन्तु मम सिक्खसंगताः
धर्मवीरभतिभिर्निरन्तरम् ।
त्वं शुभो मति गतिप्रदो भव,
जीवने जयकरो नता वयम् ॥३०॥
खड्गमेव गुरुणा समर्पितं,
संस्तुतं विनतसंगतोऽगृह्णात् ।
दुर्गयार्तिहरया स्वहस्तिका,
तैः प्रसादभतिभिश्च धारिताम् ॥३१॥

(क्रमशः)

# स्वीकृतिपत्राख्यकथायां ।

## (१०)

## पाणिग्रहणम् ।

डॉ० जयदेव जानी 'रसराजः'
बड़ोदरा ।

अपरेद्युन्यायालये हस्ताक्षरविधिना पुष्पमालार्पणेन स्वप्नप्रसङ्ग इवाऽऽवयोः पाणिग्रहणं सम्पादितम् । सुजातामन्यांश्च सम्बन्धिजनान् पादवन्दनादिना सम्भाव्याऽऽशीर्वादै रभिनन्दितावावां प्रसन्नावपि विचारमग्नाविव, हर्षपुलकितावपि मनसि खिन्नाविव, प्रमोदितान्तःकरणावपि किमिदं त्वरया सम्पन्नमिति विचारमूढ़ावास्व ।

सायंकालेऽपि भोजनसमारम्भे कतिचित् सम्बन्धिनः पञ्चषा राजनीतिज्ञा मम च केचन सुहृद आसन् । अहं तु सारल्येन संपादिते विधौ तुष्ट आसम्, किन्तु नैतद् उर्वशीमनसः समाधानवृत्तिकरमभवत् । समग्रातिथिशून्ये गृहे सुजातां पूर्णाशां प्रफुल्लितां च दृष्ट्वा उर्वशी त्वकथयत्—"मातः ! किमेतत् ? सुखसम्पन्नाः वैभवशालिनोऽस्मादृशाः समाजश्रेष्ठिनो यद्येवं प्रकारकं सारल्यं विवाहविधौ दर्शयेरंस्तर्हि मध्यमवर्गीयाणां का वार्त्ता ?"

"उर्वशि ! श्वः प्रत्युत्तरं दास्ये । अधुना त्वहमतीव क्लान्ता ।"

शनैः शनैः पदानि कृत्वा आवामुर्वशीकक्षं प्राप्तवन्तौ । तत्र तु तिसृषु भित्तिकासु मनोरमाणि चित्राणि, वातायने चीनांशुकतोरणानि, शयने शेफालिकाकुसुमपंक्तिभिः लिखितानि 'स्वागतं नववधूवरयोः' इति अक्षराणि, शयनसमीपवर्तिनि पीठिकाफलके पयःपूर्णं पात्रद्वयं, पत्रं च नववधूवररूपेण प्रविशन्तौ आवां सत्कारं व्याहरन् । ईषत्पुरः पदारोपणतत्परं मामुर्वशी स्वहस्तेन गृहीत्वाऽतिष्ठत् । तया तु संज्ञाद्वारैव हस्ताभ्यामुत्थाप्याऽहं तां तत्र नयेयमिति संकेतितम् । मया तदनुष्ठितमेव । शयने समुपवेशितोर्वशी पत्रं नीत्वोच्चैः अपठत्—

"प्रियपुत्रि ! वत्स 'धीरेन्द्र ! पाणिग्रहणं तु मित्रग्रहणमेव । वधूवरसम्बन्धः स्वर्गे निश्चीयते पृथिव्यां तु जनैरुत्सूयते । अधुना जननीसमनुज्ञातौ समाजाभिनन्दतौ सर्वकारमान्यतां प्राप्तौ युवां सर्वप्रकारेण स्वतन्त्रौ स्थः । अधुना न कश्चिदपि द्वारं खटखटायिष्यति, परिणीतयोः केलिबाधाभयात् । कंचिदपि द्वारोपान्तस्थं विलोक्य सम्भ्रान्तस्थितिरुत्पत्स्यते, मित्रादीनामागमनकालस्य नियतत्वात् । न वै कोऽपि प्रश्नावल्या वधूवरौ भाययिष्यति, वधूवरयोः सर्वतन्त्र-स्वतन्त्रत्वात् । किन्तु ममेयमेका विज्ञप्तिर्यत् समयसंयमिता भोगा एव श्लाघ्यन्ते । निशायामेकान्ते च यद्यत् । कार्यं तत्तत् । सर्वमसमये न कर्तव्यम् । अतिभोगो विनाशाय । अस्तु, अद्यप्रभृति धीरेन्द्रः सर्वनिरीक्षणे नियोजितो मया । अनुभूयतां शुभरात्रिः ।

युष्मदीया सुजाता ।"

"धीरेन्द्र ! अनुभूयतां शुभरात्रिः । न हि नहि । अनुभूयतां सुखरात्रिः, आनन्दनिस्यन्दिनी रात्रिः । त्वं किं वदसि ।"

"अनुभूयतां नववधूः।" इत्युक्त्वा मया सुखसाधको मोददायको हर्षजनको स्मितमिश्रितश्च रागोऽन्वभावि। तदनन्तरं दुग्धं गृहीत्वा शय समुपविष्टावावाम् अन्योन्यम् अनिर्मिषण पश्यन्तावास्व। तया मां प्रति दुग्धपात्रं प्रसारितं मया च तां प्रति। किञ्चिद् दुग्धं परिपीय तयोक्तम्—'धीरेन्द्र! तवोष्ठप्रान्तौ संजीरौ। पिबामि तावत्।" मया च तस्याः सारल्यं सहर्षमभिनन्दितम्। पुनश्च तया दुग्धपात्रं गृहीतं, मयाऽपि गृहीतम्। दुग्धपात्रे तस्या मुखं स्पृष्टे तया स्वमुखमधः कृतम्। दुग्धधारा तस्याश्चिषुकात् कण्ठदेशं कण्टदेशात् स्तनमध्यं स्तनमध्यान्नाभिं नाभितश्च नीवीं प्रापत्। तया भामिन्या कोपेनेव गदितम्—"हम्…नाऽहमधुना स्नानगारं गन्ता। स्वमुखेनैव मार्जय।" इत्युदीर्य तया स्वहस्ताभ्यां मम मस्तकं कर्णाभ्यां प्रगृह्य मम मुखं दुग्धधारापथे न्यवेशयत्। मदत्तेन पुनरपरे पञ्चेषवः पातिताः। सा त्वतीव प्रसन्ना पुलकिता च जाता। स्नानागारात् पुनः शयनं प्राप्तावावां दुग्धपात्रं गृहीत्वोपधिष्टौ। उर्वश्या मम हस्ताद् दुग्धपात्रं नीत्वा फलकोपरि स्थापितं स्वहस्ताच्च मां दुग्धं पाययितुं पात्रं मदधरमस्पर्शयध्। आवयोर्नयनानि तु तारकमैत्र्यामेव मग्नान्यासन्। अतः पात्रान्निर्यन्ती दुग्धधारा किञ्चिदग्रेनीतमुखस्य मम चिबुकाद् आगत् पादमध्यभागमक्लेदयत्। मयि तु स्नानागारं प्रति प्रस्थिते एव उर्वश्याऽहं प्रतिरोधितः।

ससुखं सानन्दं सहर्षं सपुलकं सक्लमं सश्रमं शयनं भजमामोऽहमुर्वशीमपि तथैव तुष्टां हृष्टामानन्दितां च विलोक्याऽतीव प्रसन्नोऽभवम्। तदा तया जल्पितम्—

"एतादृशमेव विधातु स मया प्रेरितः।"

"कः?"

"जनार्दनः।"

"उर्वशि! कोऽयं जनार्दनो ननु?"

ततस्तया क्रोधपूर्णरक्तेक्षणया विचित्रशब्दभर्त्सनपरया च स्वहस्तांगुलीमध्यभागे दाहचिह्नं दर्शयित्वा गर्जितम्—"स एव नरपशुः, कामुकनिशाचरो दुष्टो जनार्दनो यो मामेतद् दाहचिह्नम्… एतद् दाहचिह्नम्…।"

"अस्तु, अस्तु। उर्वशि! सुखं शयीथाः।"

शनैः शनैस्तस्या उत्कम्पमानं हृदयं तु शान्तमभवत्। न केवलं मम हृदयम्। कीदृशी चिन्ता सुजातया एकाकिन्या जनन्याऽनुभूता भवेदिति मया प्रत्यपादि। सर्वथा पतिवियोगे पुत्रीरक्षणं कष्टप्रदमेव। यतो

भवति कुलवधूकुलं शुचि,<br>
यदि विमलाचरणं च शिक्ष्यते।<br>
दहति निजकुलं परं च सा,<br>
मनसिजदाहविमुक्तसत्पथा॥

—क्रमशः।

महर्षि—निर्वाण दिने विशेषत:

# "महर्षेरावाहनम्"

—डा० सावित्रीदेवी शर्मा
१०, केलाबाग, सावित्री सदन (बरेली)

दयानन्द प्रोक्तं सुमार्गं व्रजेम
तदादिष्ट सत्यव्रतं धारयेम ।
कथं भारतीया: सुभद्रं लभन्ताम्
तदेवाधुना सर्वथा चिन्तयेम ॥ १ ॥

इमे शासका: कर्णधारा: स्वदेशे
न पश्यन्ति कष्टं भयार्त्ति प्रजाया: ।
स्वभोगाकुला धर्मभ्रष्टा: कुमार्गे
यतन्ते सदानिर्दया लक्ष्यहीना: ॥ २ ॥

न जानन्ति कर्त्तव्य शक्तिप्रभावं
न ध्यायन्ति विष्णो: सुकर्मस्वभावं ।
भजन्ते स्वसत्तापदासवित लोभं
सदा कामयन्ते स्वपक्ष मतैक्यम् ॥ ३ ॥

नरेशा: स्वयं देशद्रोहस्य पापं
विधायापि लज्जां न ग्लानिं भजन्ते ।
समे द्वेषिणो वञ्चिता राजनीते:
शुभाचारकार्येषु नैते रमन्ते ॥ ४ ॥

महर्षे, समायाहि देशो भृशार्त:
प्रभो ! त्वां विना दृश्यते नान्यमार्ग: ।
समाधीयतां कष्टदं प्रश्नजालं
समाह्वानमस्त्यार्यलोके जनानाम् ॥ ५ ॥

सुविज्ञान दृष्टि: ऋषे ? दर्शनीया
त्वया साम्प्रतं भारती रक्षणीया ।
गतो राजधर्मो गता राजनीति:
न राजन्य शक्ति: न दुष्कर्मभीति: ॥६॥

त्वदीयं प्रियं भारतीयं स्वराज्यं
सुराज्यं न जातं प्रजातन्त्रमात्रम् ।
कथं गण्यते विश्वराष्ट्रेषु मूढ़:
जगद्गौरवं दत्तपूर्वन्तु यस्मै ॥ ७ ॥

त्वमेवागतो रामशक्तिस्वरूप:
श्रुता प्रार्थना या च त्रेतायुगे सा ।
त्वया द्वापरे त्रस्तलोकार्त्तिमुक्तयै
समाराधितं राष्ट्रसेवाव्रतं वै ॥ ८ ॥

कुतो विघ्नरूपा: समायान्ति हिंस्रा:
विनाशाय नित्यं भयातङ्क वेशा: ।
त एवोग्रवादिस्वरूपे पिशाचा:
जनान् घातयन्तोऽसुरा छन्नलीला: ॥९॥

विनष्टं बलं देव ! शस्त्रं विलुप्तं
महावीर, तेजस्वितेयं प्रशान्ता ।
क्व गच्छेम दीना वयं भारतीया:
गुरो ! सत्वरं देशरक्षा विधेया ॥१०॥

इमे ब्रह्मवर्चस्विनो देवपुत्रा:
सदा जागृता ब्राह्मणा: सन्तु देशे ।
क्षतं त्रायतां शूरवीरस्य शक्ति:
अभावस्य नाशं करोत्वार्य वैश्य: ॥११॥

# अभिनवव्यंग्यपद्यानि

डॉ० प्रशस्यमित्रः शास्त्री

बी २९, आनन्दनगर, रायबरेली (उ० प्र०)

## १—शतार्थम्पुनरागतः

देवदत्तगृहे कश्चिद् अपरिचित एकदा।
कृतज्ञ भावमापन्नः पुरुषस्त्वेवमाह यत्॥

भवानेवैकदा मह्यं दत्त्वा रूप्याणि वै शतम्,
साहाय्यं कृतवान् एतन्नैवाऽत्र विस्मराम्यहम्।
देवदत्तस्तदा ब्रूते नाऽहं सर्वं स्मरामि तत्,
अस्तु, किं तानि रूप्याणि प्रत्यावर्त्तितुमागतः।
तच्छ्रुत्वा स नरस्त्वाह नैवेदं वर्त्तते परम्,
शतम् अन्यं ग्रहीतुं हि पुनरत्र समागतः॥

## २—कार्यालयेऽपि किं कार्यम् ?

राज्यकार्यालयस्यैकः कर्मचारी स्वके गृहे,
चायपानं प्रकुर्वाणः पत्रिकापठने रतः।
बहुकाले व्यतीते च तस्य पत्नी जगाद यत्,
गमिष्यति भवानद्य किं न कार्यालयेऽधुना ?
पत्न्यास्तद्वचनं श्रुत्वा विस्मितः स उवाच यत्,
मया तु ज्ञातमेतद् यत् स्थितः कार्यालयेऽस्म्यहम्॥

## ३—एकस्मिन्नेव वार्धक्यम्

एकस्मिन्नेव पादे तु कश्चिद् वृद्धः पितामहः,
पीडया दुःखितस्तावद् वैद्यराजमुपागमत्।
निरीक्ष्य निपुणः तं च वैद्यराजो ब्रवीति यत्,
वृद्धावस्थाप्रभावेण केवलं कष्टमस्ति तत्।
वैद्यस्य वचनं श्रुत्वा वृद्धः स पुरुषस्तदा,
महदाश्चर्यमाध्याय सविस्मयम् उवाच यत्।
उभयोः पादयोः किन्तु समानायुर्मनन्तरम्,
कथं केवलमेकस्मिन् पादे वार्धक्यमागतम्॥



छात्रस्तम्भः

# लोभः पापस्य कारणम्

—नरेन्द्र ठक्कुरः (संस्कृत प्रतिष्ठा)

नारायणपुरम, पूर्वी चम्पारणम् (बिहारम्)

बिहारप्रदेशस्य कस्मिश्चिद् ग्रामे एकः गोपालः प्रतिवसति स्म। सः महान् लोभी आसीत्। सः दुग्धविक्रयं कृत्वा जीवनं निर्वहति स्म।

सः सर्वदा मुण्डे दुग्ध भाण्डम् नीत्वा गच्छति स्म। गमनावसरे सः चिन्तितवान्-अहं स्वल्पं-स्वल्पं लाभं कृत्वा महान् धनिकः भविष्यामि, ततः बहुव्यवसायं कृत्वा भूयोभूयः धनार्जनं करिष्यामि। तदनन्तरं प्रासादनिर्माणं करिष्यामि। बहून् सेवकान् नियोजयिष्यामि। अहं एक वातानुकूलित-प्रकोष्ठे उपविश्य सर्वनिरीक्षणं करिष्यामि। सामान्येऽपि दोषे रुष्टः भविष्यामि। किमपि न खादिष्यामि। केनापि साकं वार्तालापं न करिष्यामि, पुत्रकन्यादयः आगत्य कथयिष्यन्ति भोः तात! भोजनार्थम् आगच्छतु। अहं उत्तरं न दास्यामि। मम पत्नी विनम्रवृत्या कथयिष्यति—भो स्वामिन्, क्रोधं मा करोतु! आनन्देन आगत्य भोजनं करोतु, अहं मस्तकचालनं कृत्वा वदिष्यामि—न न, अहं न खादिष्यामि।

इत्यवसरे एव दुग्धभाण्डम् मार्गे पतित्वा चूर्णीभूताम् जातम्। दुःखेन सः गृहं प्रत्यागतः अतः उक्तम् 'लोभः पापस्य कारणम्'।

॥ इति ॥

# संस्कृतपत्रिकाणां परिचयः

## [ तृतीयो भागः ]

शिवदत्तपाण्डेयः स० विभागाध्यक्ष (हिन्दी)
श्री आनन्द संस्कृत महाविद्यालय बेला,
मवई, फतेहपुर (उ० प्र०)

पत्रं "वेदान्त-सन्देशः" द्वैमासिकं मनोहरम् ।
श्रीमनोहरदासेन कर्णपुरात् प्रसार्यते ।।४९।।
"यन्मालव-मयूर"स्तत्पत्रमस्तिद्विमासिकम् ।
रुद्रदेवत्रिपाठेन "मन्दसौरात्प्रपाद्यते ।।५०।।
"सत्यानन्दं" हितं पत्रं "कलिकाता" विभूषणम् ।
"यादवपुरतो" नित्यं मासे मासे प्रकाश्यते ।।५१।।
"उद्यानपत्रिका" ख्याता लोकप्रिया च मासिकी ।
"आन्ध्र"-देश-समुद्भूता नगराच्च "तिरूपतेः"।।५२
"साम्नास्यं" मासिकं चैवविद्वच्चित्तानुरञ्जनम् ।
पत्रं"महम्मदाबादात्" "गुजराता"द्विमुच्यते ।।५३।।
मासिकी "भारत-श्री"र्या भारतीपरिषच्छ्रितम् ।
प्रसूयते प्रयागे सा प्रध्या श्रीधरशास्त्रिणा ।।५४।।
"प्रणव-पारिजातं" च कलिकाता-विनिर्गतम् ।
मासिकं पठ्यते लोकैः विद्विद्भिश्चप्रशस्यते ।।५५।।
गीर्वाण-भारती-पत्रं यत् 'संस्कृत-प्रचारकम्" ।
दिल्ली-"मौजपुरा"न्नीतं मासे मासे मनोहरम् ।।५६
"भूपेन्द्र-वसु-एवेन्यू-कलिकाता"-विनिस्सृतम् ।
"मञ्जूषा" मासिकं पत्रं श्रीक्षितीशेनपाद्यते ।।५७।।
"जम्मू-कश्मीर-भूमिस्थ-श्रीनगरात्प्रसार्यते ।
"श्रीः"मासिकंमनोज्ञं च नित्यानन्देनशास्त्रिणा ।।५८
"पूर्णत्रयी" सुविख्याता षाण्मासिकी प्रकाश्यते ।
शोधच्छात्रप्रिया वन्द्या "तृप्पूणित्तुर"-केरलैः ।।५९।।

"परमार्थसुधा" हृद्यां त्रैमासिकी रसावहा ।
वाराणसी-पुरी-शोभा काले काले वितीर्यते ।।६०।।
"पुरी"-लोकश्रुतं पत्रं द्वैमासिकं "प्रियम्वदा" ।
गद्य-पद्य-मयं रम्यं "हरिहरेण" प्रकाश्यते ।।६१।।
वाराणसी-भदैनीतः "किशोरज्ञानसद्मनः ।
"ललिता" मासिकं पत्रं निस्सार्यते यथाविधि ।।६२।
पत्रं "संस्कृतसाकेतः" अयोध्यायाः प्रभूयते ।
"पाक्षिकं" पठ्यते लोकैः पीयूष. रसवर्षणम् ।।६३।।
साप्ताहिकं मनोज्ञं च "संस्कृतम्" बुधसम्मतम् ।
अयोध्या-भूमि-सम्भूतं सामोदं पठ्यते जनैः ।।६४।।
"गोरखपुर-चर्चा" यत् गोरखपुर मण्डलात् ।
पाक्षिकं वृत्तपूर्णं तत् "बक्शीपुराद्विमुच्यतै ।।६५।।
"श्यामला" वार्षिक पत्रं "शिमला"-नगरोद्भवम् ।
हिमाचलप्रदेशस्य कला-संस्कृति-वर्द्धनम् ।।६६।।

[आर्या छन्दसि—]

मासिकं प्रियंपत्रं "संस्कृत-साहित्य-परिषत्पत्रिका" ।
"श्याम-बाजारोत्थितं "कलिकाता"-नाम्नः
पत्तनात् ।।६७।।
डाक्टर सुमनमिश्रेण, काले काले कर्णपुर सम्भवम् ।
"अभिनव-संस्कृतं" नाम, अतिकौशलात्सम्प्र-
सार्यते ।।६८।।

[अनुष्टुप् छन्दसि]

या "वेदोद्धारिणी" नाम्नी पत्रिका विश्व-विश्रुता ।
वितीर्यतेऽखिलेराष्ट्रे "नवदिल्ल्याविनातिथिम् ।।६९।

# रोहितमत्स्यः

डा० कैलाशनाथ द्विवेदी डी० लिट०
प्राचार्य : म० प्र० महाविद्यालयं
कोंच जालौन (उ० प्र०)

रोहितमत्स्यो गंगास्रोतसि, संतरन् सुखेन निलीनः ।
ब्रह्मकमण्डलुशिवशिरसो या निःसृत गंगा विमला,
जीवजन्तुपालिका बालिका क्रीडन्तीव सुचपला ।
पापिजनानां पापकामना मज्जति भवति च विफला,
गंगालाभाद् गतिमतिशीलो जीवो भवति न दीनः ।
रोहितमत्स्यः··· (१)

प्रलयपयोदैर्जलसम्भरिताः सागर-सरितः क्षुब्धाः,
सृष्टेर्नवकामनाऽऽकुलोऽयं कोऽपि सुस्रष्टा लुब्धः ।
'एकोऽहं बहुस्याम' जगत्यां जीवन् जयेमलुब्धः,
कामातीतः कामरूप इव ह्यवतरितोऽयं मीनः ।
रोहितमत्स्य··· (२)

सबलाः कामातुराः जना इह निगिरन्तीव निर्बलान्,
को रक्षति निर्बलगृहद्वारं सुखयति कश्च पीडितान् ।
भययुक्तः को याति जगत्यां गत्वा पथः दुर्गमान्,
मात्स्यन्यायइह निगलतिनिखिलंकोऽपि न भीतिविहीनः
रोहितमत्स्यो··· (३)

पयसि मज्जितां प्रेमप्रतीकां दृष्ट्वेमां नवभूषाम्,
कामरूपरोहितमत्स्यो वै निगिरन् ययौ विभूषाम् ।
कामनिगीर्णां प्रेमनिधिं तां दृष्ट्वा द्रवति सद्दूषाम्,
मात्स्यन्याय इह सदा न पुष्टः दृष्टः सदा न पीनः ।
रोहितमत्स्यो··· (४)

धीवरजालविद्धमत्स्योऽयं गंगावारिविदूरः,
मत्स्यादी मिलतीह रोहितमहितः कुटिलः क्रूरः ।
भित्त्वा ह्युदरम् चास्य मुद्रिकां नीत्वा निधिं स शूरः,
प्रेमनिधिं निष्काम प्रेमिको लब्ध्वाऽभवत् ह्यदीनः ।
रोहितमत्स्यो··· (५)

रोहितमत्स्यः संयोगः किल कामवासनारूपः,
आजीविकापरायण लोके मायाजलमय कूपः ।
जालबद्ध इव भवति कदाचिन् भयमुक्तोऽपि न भूपः,
त्यक्त्वान्यायं कामवासनां यः पथि चरति स पीनः ।
रोहितमत्स्यो गंगास्रोतसि संतरन् सुखेन निलीनः ।(६)

# विचार-वीचयः

—डा० रमेशचन्द्र दास शर्मा
श्री लालबहादुर शास्त्री राष्ट्रीय संस्कृत
विद्यापीठ, कटवारिया सराय, नई दिल्ली-16

सत्यन्ते यदि सन्निधौ तव सखे ! सन्तिष्ठते सर्वदा
भावश्चातिविशुद्धधीः सुविमला कर्मव्रजाः शर्मदाः ।
चित्तं ते यदि वासुदेवचरणौ संसेवते सर्वदा ।
किन्तेऽसज्जनसङ्गमे वद सखे ! सर्वस्य दाता हरिः।।१।।

गर्भेयोऽवति चेतनान्करुणया क्रोडेऽथ मातुः स्वयं,
वार्द्धक्यावधिचाशनादि विविधैर्भोगैश्च यः पूर्यते ।
योऽनाथान्परिपातिकाननगतान् शूकादि जन्तूंस्तथा ।
का चिन्ताम जीवने यदिहरिर्विश्वम्भरो गीयते।।२।।

सन्तः करोति सुकृतं प्रविसह्य खेदं,
स्वान्तः सुखाय निजकर्म न वञ्चनार्थम् ।
मन्येत तद् यदि जनश्छलनार्थमेतत्,
मज्जत्यसौ घटित घोरफले हि नूनम् ।।३।।

रामोऽस्ति यत्र न हि तत्र समेति कामः,
कामोऽस्ति यत्र न हि तत्र समेति रामः ।
कामोहरः शुभधियः विनिपात्य क्षेमात्,
रामश्च मोक्षपदवीं प्रददाति सम्यक् ।।४।।

ज्ञातेऽपि सङ्गतिबलं न जहात्यसङ्गं,
श्रुत्वापिशास्त्रवचनं न च शास्ति चित्तम् ।
गत्वापि सन्ततगुरोश्चरणाब्ज संगं,
हा ! नादधाति सुमतिं चपलो मनो मे ।।५।।

मूढोजनो गुणशतैरपि शिक्षमाणः,
ह्रासेन तत्त्व वचनं विफलं विधत्ते ।
संसेवते निजधिया सुविचार्यमार्गं,
यस्यास्ति पूर्वं तपसा सुकृतं नरस्य ।।६।।

वक्ष्यामि किं नहि बत प्रभवामि वक्तुं,
लोलाद्भुतां प्रनिमिषन् विरमामि बद्ध्वा ।
चित्तं निरुध्य बत केशवपाद पद्मे,
शोचामि तद्भवति यद् भवते विभाति ।।७।।

वाञ्छन्ति यद्धि यतयो नितरां प्रतप्ताः,
स्थानं प्रपञ्च रहितं कलकण्ठयुक्तम् ।
वृक्षादि निर्झरगणैरति शोभमानं,
स्थानमवाप्य मलिनो विफलं विधत्ते ।।८।।

## दिव्यामृतम्

यद्वो देवाश्चकृम जिह्वया गुरु-
मनसो वा प्रयुती देवलनम् ।
अरावा यो नो अभि दुच्छुनायते ।
तस्मिन्तदेवो वसवो निधेतन ॥

—ऋग्वेद १०।३७।१२

गुरुदेव की शरण ग्रहण करते ही प्रमादवश पूर्व किये हुए मानसिक वाचिक पाप वे चाहे देवों की अवज्ञा रूप किसी भी प्रकार के क्यों न हों, तत्क्षण भगवत स्वरूप गुरुदेव की अमृतमयी कृपा दृष्टि से नष्ट हो जाते हैं। गुरुभक्त विरोधी समस्त पाप की निवास भूमि बन जाता है।

श्रेयश्च प्रेयश्च मनुष्यमेत-
स्तौ सम्परीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभिप्रेयसो वृणीते,
प्रेयो मन्दो योग क्षेमाद् वृणीते ॥

—कठोपनिषद्

मानव जीवन में श्रेय और प्रेय दोनों ही आते हैं। बुद्धिमान मनुष्य दोनों के स्वरूप को अच्छी तरह विचार कर दोनों को अलग-अलग समझ लेता है। बुद्धिमान प्रेय (भोग-साधन) की अपेक्षा श्रेय (परमकल्याण के साधन) को ही श्रेष्ठ समझकर ग्रहण करता है। मन्द बुद्धि वाले (लौकिक भरण-पोषण-रक्षण की कामना) भोगों के साधन रूपी प्रेय मार्ग को ही अपनाता है।

## व्रतोत्सव निर्देशिका

(दिनांक २१-१-९३ तः दिनांक २०-२-९३ पर्यन्तम्)

| दिनांकः | वारः | तिथिः | व्रतोत्सवः |
|---|---|---|---|
| २२-१-९३ | शुक्रवारः | अमावस्या | मौनी अमा. पर्व |
| २६-१-९३ | मंगलवारः | चतुर्थी | तिल चतुर्थी वरद कुन्द चतुर्थी पर्व, गणतन्त्र दिवसः० |
| २७-१-९३ | बुधवारः | चतुर्थी/पंचमी | वसंत पञ्चमी श्री पञ्चमी पर्व |
| ३०-१-९३ | शनिवारः | सप्तमी | रथ सप्तमी आरोग्य सप्तमी महा. गान्धी बलि. दि० |
| ३१-१-९३ | रविवारः | अष्टमी | भीष्माष्टमी |
| ३-२-९३ | बुधवारः | एकादशी | जया एका. व्रतम् |
| ४-२-९३ | वृहस्पतिवारः | द्वादशी | भीष्म द्वादशी, प्रदोष व्रतम् |
| ६-२-९३ | शनिवारः | चतुर्दशी | श्री सत्यनारायण व्रतम् माघ पू. माघ स्नान समाप्तिः |
| ९-२-९३ | मंगलवारः | तृतीया | श्री गणेश व्रतम् |
| १२-२-९३ | शुक्रवारः | षष्ठी | संक्रान्ति; सूर्य कुम्भ राशौ |
| १७-२-९३ | बुधवारः | एकादशी | विजया एका. व्रतम् |
| १८-२-९३ | वृहस्पतिवारः | द्वादशी | प्रदोष व्रतम्, वसन्तारम्भः |
| १९-२-९३ | शुक्रवारः | त्रयोदशी | श्री महा शिवरात्रि व्रतम्, महर्षि दयानन्द निर्वाण दि० |

(शुभ कार्येषु वर्ज्यं पञ्चकम्—दिनांक २४-१-९३ (२६. ६ प.) तः दिनांक २९-१-९३ (२७ घ. ३७ प.) पर्यन्तम्)

—शुभमस्तु

# सूचना एवं प्रसार निदेशालय दिल्ली

## संस्कृत भाषा हमारी आस्थाओं व प्रेरणाओं की गंगोत्री

—पुरुषोत्तम गोयल

दिनांक 23-12-92

अध्यक्ष महानगर परिषद, श्री पुरुषोत्तम गोयल ने आज कहा कि संस्कृत भारत के समग्र चिन्तन को अभिव्यक्त करती है। इस भाषा ने दिलों को जोड़ते हुए हमारी भावनाओं को सार्वभौमिक बनाया है। सभ्यता को विकसित किया है। उन्होंने कहा कि संस्कृत भाषा अपनी विराटता को दर्शाते हुए हमारी प्रेरणाओं व मूल्यों का प्रतिनिधित्व करती है और मानवीय महालक्ष्यों—अहिंसा, जीवदया, बंधुत्व व "वसुधैव कुटुम्बकम्" जैसे महान संदेशों की प्रेरणा देती हैं।

उन्होंने कहा कि नई शिक्षा नीति में संस्कृत भाषा के विकास को सम्मिलित किया जाना चाहिए।

श्री पुरुषोत्तम गोयल ने उक्त उद्गार मुख्य अतिथि के रूप में आज दिल्ली-प्रशासन की संस्कृत एकादमी द्वारा आयोजित "संस्कृत श्लोक संगीत प्रतियोगिता" का उद्घाटन करते हुए व्यक्त किये।

## शांति और सद्भाव हेतु आग्रह—

दिनांक 23-12-92

उपराज्यपाल श्री पी० के० दवे और दिल्ली के प्रमुख नागरिकों ने दिल्लीवासियों से शांति और सद्भाव बनाये रखने की अपील की है। उपराज्यपाल द्वारा बुलाई गई बैठक में मौजूद संसद सदस्य, राजनीतिक दलों के प्रतिनिधियों तथा सामाजिक, सांस्कृतिक, शैक्षिक संगठन के प्रतिनिधियों तथा उपराज्यपाल ने दिल्ली के नागरिकों को इस बात के लिए धन्यवाद दिया कि उन्होंने संयम से काम लिया और बहुत ही मुश्किल समय में शांति बनाये रखी।

## मालवीय जयन्ती

दिनांक 24-12-92—राष्ट्र के प्रति समर्पित स्व० पण्डित मदन मोहन मालवीय को उनके १३१वें जन्म दिवस के अवसर पर ऐतिहासिक पुराना सचिवालय प्रांगण में श्रद्धांजलि अर्पित की गई।

स्वतन्त्रता सेनानी की सहायता समिति, दिल्ली प्रशासन द्वारा पुराना सचिवालय के प्रांगण में आयोजित श्रद्धांजलि समारोह में उपराज्यपाल श्री पी० के० दवे मुख्य अतिथि थे व समारोह की अध्यक्षता महानगर परिषद के अध्यक्ष श्री पुरुषोत्तम गोयल ने की।

प्रांगण में स्थापित मालवीय जी की प्रतिमा पर माल्यार्पण किया गया।

श्रद्धांजलि अर्पित करते हुए उपराज्यपाल श्री पी० के० दवे ने कहा कि मालवीय जी सच्चे राष्ट्र-भक्त थे। उनका दृष्टिकोण व्यापक था। उनकी शैक्षणिक दृष्टि वैज्ञानिक थी और वे एक धर्म-निरपेक्ष व्यक्ति थे। श्री दवे ने कहा कि भारत ने १९वीं सदी में राष्ट्र भक्तों को जन्म दिया।

महानगर परिषद के अध्यक्ष श्री पुरुषोत्तम गोयल ने कहा कि पं० मालवीय पक्के हिन्दू थे। उनका राष्ट्र के प्रति चिंतन और सोच व्यापक था और इसीलिए वे "महामना" कहलाये।

इस अवसर पर बच्चों ने राष्ट्र भक्ति व कौमी एकता को बढ़ावा देने वाले गीत प्रस्तुत किये।

## विधवाओं को सिलाई मशीन वितरित की

दिनांक 29.12.92—श्री एस० के० बत्रा निदेशक एवं सचिव, समाज कल्याण, राष्ट्रीय राजधानी क्षेत्र, दिल्ली ने आज 119 विधवाओं को सिलाई मशीनें वितरित की। इस समारोह का आयोजन समाज कल्याण निदेशालय ने आई० टी० आई० बिल्डिंग, कैनिंग लेन, नई दिल्ली में किया।

# समाचाराः

## सरस्वती स्नातक मण्डल-अधिवेशनम्

पञ्जाब प्रदेशीय "खन्ना" नगरस्थ "श्री सरस्वती संस्कृत महाविद्यालयस्य वार्षिकम्-अधिवेशनम् 3-4 अप्रैल 1993 दिनांकयोः भविता न तु प्रतिवर्षमिव 25-12-1992 दिनांके।"

एतत् परिवर्तनं 3-4 अप्रैल 1993 दिनांकयोः सम्पत्स्यमानं "महाविद्यालय-स्वर्ण जयन्ती-महोत्सवम् उपलक्ष्य" निर्धारितम्।

महोत्सव-अवसरे प्रत्येकं स्नातकः—५००) रु० स्वमातृसंस्थायै प्रदद्यात् इति अपेक्ष्यते तथा च उक्तमहाविद्यालयात्, शास्त्री परीक्षाम् उत्तीर्य आचार्य/एम० ए०/पी० एच० डी० आदि—उपाधिजातम् अधिगम्य यत्र कुत्रापि कार्यरताः सेवानिवृत्ताः वा स्नातका अनुरुध्यन्ते स्वं स्वं संक्षिप्तं जीवनवृत्तं यथाशीघ्रं प्रेषयितुम् इति निवेदयति।

देशराजः शास्त्री
प्रचार मन्त्री

## २२०० ईसाईयों द्वारा वैदिक धर्म दीक्षा

गुरुकुल आमसेना खरियार रोड (उड़ीसा) का रजत जयंती महोत्सव, हर्ष की लहर, आर्य वीरों में भारी उत्साह।

नई दिल्ली ३० दिसम्बर,

गुरुकुल आश्रम आमसेना, खरियार रोड (उड़ीसा) का रजत जयंती महोत्सव बड़े उल्लास के साथ सम्पन्न हुआ। देश के विभिन्न प्रान्तों से हजारों की संख्या में आर्य नर-नारियों और युवा आर्य वीरों ने भाग लिया। सार्वदेशिक आर्य प्रतिनिधि सभा के प्रधान स्वामी आनन्दबोध सरस्वती ने समारोह की अध्यक्षता की। ३० दिसम्बर को सुसज्जित पण्डाल में ३ बड़े-बड़े यज्ञकुण्डों के आस-पास लगभग २२०० ईसाईयों को वैदिक धर्म की दीक्षा दी गई, जिनमें स्त्री, पुरुष तथा बच्चे सभी सम्मिलित थे। शुद्ध होने वाले बनवासियों को विदेशी ईसाई मिशनरियों ने कुछ समय पूर्व प्रलोभन देकर ईसाई बनाया था, जिन्होंने पुनः स्वेच्छा से वैदिक धर्म की दीक्षा ली।

इस समारोह में स्वामी ओमानन्द, स्वामी दीक्षानन्द, प्रो० शेरसिंह, आचार्य हरिदेव, श्री दिवानचन्द पल्ता, माता प्रेमलता शास्त्री, श्री रमेशचन्द्र श्रीवास्तव तथा आर्य प्रतिनिधि सभा मध्य भारत के अधिकारी व आर्य जगत की कई महान हस्तियों ने भाग लिया। समारोह का सफल संचालन स्वामी धर्मानन्द जी ने किया।

आचार्य विशिकेशन शास्त्री ने मन्त्रोच्चार के साथ यज्ञ प्रारम्भ कराया और स्वामी आनन्दबोध सरस्वती ने "पुनन्तु माम् देवजनः, पुनन्तु मनसा धिया" मन्त्र का उच्चारण करते हुए बैठे बनवासी स्त्री, पुरुष और बच्चों पर आम के पत्ते से जल छिड़ककर वैदिक धर्म की दीक्षा दी।

सभी शुद्ध हुए बनवासियों को भारी संख्या में वस्त्र तथा धोतियाँ, गुरुकुल के प्रधान श्री मित्रसेन जी ने तीन लाख रु० की राशि दान, सार्वदेशिक सभा की ओर से १० हजार रु० की राशि की सहायता गुरुकुल को देने के लिए स्वामी आनन्दबोध सरस्वती जी ने घोषणा की। जनता में भारी उत्साह था।

डा० सच्चिदानन्द शास्त्री
सभा मन्त्री

आर. न. 39380/78 बिना टिकट भेजने का लाइसेंस नं० यू (U)(डी. एन.) 35 (डी०-एल 12023/93)

सेवायाम्

श्रीयुत ................................................

वी.वी. रामा परिञ्जा।
मन्त्री गीर्वाण भाषाभिवर्धिनी सभा
राजा स्ट्रीट संस्कृत कला शाला
मेले कोटे पिन (571431)
जिला माण्डया कर्णाटक

**संस्कृतामृतम्**
पञ्जीकरणं सं० ऐस् ४००
प्रेरक:-नेपाल राजगुरुः योगी श्री नरहरिनाथः शास्त्री
१. संरक्षक:-ऋषि कल्पःपं० श्री विश्वनाथ प्रभाकर शास्त्री
संचालक-श्री सरस्वती संस्कृत महाविद्यालयः खन्ना (पं.)
२. मान्यः स्वामी आनन्द बोध सरस्वती
प्रधान-सार्वदेशिक आर्य प्रतिनिधि सभा दिल्ली।
सहायक सम्पादक मण्डलम्—
१. श्री प्रकाशचन्द्र शास्त्री विद्यालंकार
२. श्री सुधीर कुमार शर्मा, बी० काम
प्रकाशन-कार्यालय—
१४१८, बाजार गुलियान, दिल्ली-११०००६

## संस्कृतं सेवामहे

मान्याः संस्कृत विद्वांसः

यतो हि संस्कृतज्ञा एव संस्कृतपत्रपकाणामाधार भूता इत्यमात् संस्कृतभाषामुखेन वैदिक संस्कृति-सेवा राष्ट्रगौरव-वृद्धिश्च मुख्योद्देश्यमय संस्कृतामृतस्येति विदितार्थैः भवद्भिः ममता पूर्वकमादौलेख-प्रेषकैः-भाव्यम् ततः पाठकैः भव्यम्, ततो ग्राहकैः भाव्यम्। सर्वदा सर्वथा संरक्षकैः संवर्धकैश्च भवद्भिः 'संस्कृतामृतम्-इत्यस्य पत्रस्य प्रकाशनेऽस्मिन् राष्ट्रिये च कर्मणि प्रोत्साहकैः भाव्यम् इति।

इदं हि पुण्यदायकं सारवतं यज्ञं अनवरतं प्रचरेत् इत्यर्थे आवश्यकं यद् यज्ञेऽस्मन् सर्वेऽपि संस्कृतामृत-पाठकाः निम्नलिखित रूपेण आहुतिं प्रदद्युः यथा—

१—स्वेच्छया आर्थिक सहायता प्रदान रूपेण।
२—वार्षिक-शुल्क 20) रूप्यकप्रेषण रूपेण।
३—प्रकाशन-योग्यानां लेखादिकानां प्रेषण रूपेण।
४—अनुरूपाणां विज्ञापनानां प्रकाशन रूपेण।
५—परिचितानां संस्कृतानुरागि पाठकानांगृह-संकेत-—प्रेषण रूपेण

## संस्कृतामृतस्योद्देश्यानि

(क) प्राचीनार्वाचीन-संस्कृतार्षविद्यानां सच्चरितानाञ्च विश्वव्यापी प्रचारः।
(ख) दुर्व्यसन-परित्याग-प्रेरणा-पुरसरं विश्वकल्याण-कारिणीं भारतीय संस्कृतिं प्रति जनताऽभिरुचि-जागरणम्।
(ग) संस्कृत-संस्कृतिसेवायामर्पित-जीवनानां विदुषामभि-नन्दनम्।
(घ) रुचि-कराणामभिनवानां ग्रन्थानां प्रकाशनम्।
(ङ) सुरभारत्याः संस्कृतभाषायाः सरलीकरणम्।

**प्रकाशन नियमाः—**

(क) संस्कृतामृतं प्रतिमासं पंचदशे दिने प्रकाश्यते।
(ख) उद्देश्यानुकूलाः सुवाच्याः लेखाः प्रकाश्यन्ते।
(ग) लेखानां परिवर्तने सम्पादकमण्डलम् साधिकारम्।
(घ) उद्देश्यानुरूपाणि एव विज्ञापनानि प्रकाश्यन्ते।
(ङ) पुस्तकादीनां समालोचनार्थं प्रतिद्वयं प्रेष्यम्।
(च) प न लब्धं चेद् द्वादशदिनाभ्यन्तरे सूचना देया, प्रेष्यते।
(छ) वार्षिकं शुल्कं विंशतिः २०) रूप्यकाणि।

—सम्पादकमण्डलम्

मुद्रक—ब्रह्मा प्रिंटिंग प्रेस, 1232, चौक शाह मुबारिक बाजार सीताराम, दिल्ली-6 द्वारा
प्रभाकर रामरत्न, शास्त्री ने प्रकाशन कार्यालय से प्रकाशित किया।